


## मासिकी पत्रिका

संस्कृतभाषाप्रचारिणी सभा, चित्तूरु (आ० प्र०)

संपुटः ३ ] | 15 JUNE 1965 | [ क्रमाङ्कः ६



ज्येष्ठाङ्कः ] शकवर्षः १८८७ [ मूल्यम् ४० पैसाः

# विषयसूचिका





वाणीं भजत गैर्वाणीम् !



# पालय भारतदेशम् !

भारतरक्षक ! पार्थसारथे !
पालय भारतदेशम्,
परिपालय भवदुपदेशम्
परिमार्जय शत्रुमशेषम् ॥

परिसरमैत्रीपरवशवेषम्
परहिंसाविमुखनिजरोषम् ।
सूनृतवचनरचितनिजपोषम्
शूरधीरजनतापरिवेषम् ॥ भा ॥

दैववशंवदधार्मिकभावं
धर्मचक्रबोधितहितभावम् ।
मर्मानभिज्ञमतुलप्रभावं
मान्यादर्शरक्षणस्थिरभावम् ॥ भा ॥



# सम्पादकीयम्



आत्मदेशसंरक्षणं देहसंरक्षणमिव एकैकस्य मनुजस्य अत्यावश्यकं भवति। देहनिरपेक्षा योगिनोपि शरीरमाद्यं खलु धर्मसाधनमिति स्वदेहरक्षणे सयत्ना एव। अवधूतादयः महानुभावा अपि प्राणायामादिना अयाचितप्राप्तेन आहारेण पोषयन्त्येव तं यावत्पातम्। तथैव प्रपंचमैत्रीकांक्षिणः प्रपंचक्षेमकांक्षिणः नायका अपि स्वदेशस्य रक्षणं नोपेक्षन्ते, अपि तु विशिष्टाभिमानेन तं पूजयन्ति। एवं स्थिते देशोपद्रवे संजाते उपेक्षणं नैव उचितम्। तत्तत्क्षेत्रोत्पन्नानां जनानां वर्णभेदाः, लिङ्गभेदाः, वयोभेदाः, मतभेदाश्च सहजा एव प्राणिनां। न पश्यामः तादृशभेद-विरहितं कंचन देशं अथवा ग्रामं अथवा गृहं। एकगृहे विद्यमानेष्वपि एकैकस्य एकैकं अभिप्रायो भवेत्, एकैकस्य तत्वं एकैकविधया भवेदेव। तथापि आत्मगृहविषये अन्यः यदि कंचिदपकारं कुर्यात् तदा गृहस्थास्सर्वेपि एकीभूय विरोधिनिरोधने यतेरन्। अन्यथा तद्गृहं गृहस्थाः सर्वेपि च विनष्टा भवेयुः। एवमेव देशविषयेपि अस्मद्देशोपद्रवाय आक्रमणाय वा यदि कश्चिद्यतेत तर्हि देशीयैः सर्वैरपि संभूय तन्निरोधः कर्तव्यः।

यद्यग्निः कस्मिंश्चन गृहे अदीप्यत तदा अन्यैः ग्रामीणैः संभूय तस्य निर्वापणाय यावच्छक्ति प्रयतितव्यम्। अन्यथा स एव अग्निर्ग्रामं सर्वमपि भस्मीकृत्यैव विरमेत। वायोः अनुकूल्ये परिसरग्रामाणां अपि दाहः अनिवार्यो भवति। एवमेव एकस्य देशस्य उपद्रवे अन्ये च देशा तदुपद्रवात् न विमुच्यन्ते।

अद्य भारतदेशस्य चीनातः महानुपद्रवः समापतितः। तन्निरोधाय जवाहरलालप्रार्थनाव्याजेन आत्मलाभायैव अम्मेरिकारष्यांग्लदेशाः असत्साहाय्यं प्रतिज्ञिरे। तादृशवाक्सहायेनैव चीनीयाः यथाकथमपि पृष्टतोऽगच्छन्। परन्तु इदानीं चैनीयः पाकीस्थानं उत्थाप्य असत्कच्छं शिथिलयतीति अयं गूढतर उपद्रवः पुनस्समापतितः। अत्रोपद्रवे बलशालिनः चीनादेशस्य बकत्वात् अथवा बिडाल-

क्रांत अग्रराज्यानि भ्रान्तानि । अयं संघर्षः सीमासंघर्ष एवेति पाकीस्थानाय च आयुधानि स्वकानि चार्पयन्ति । तानि न जानन्ति इदं आत्मशिरसि उल्कया-कंडूयनं यद्भूत भविष्यतीति । यथा गंगायां मज्जनोन्मज्जनानि कुर्वन्तं कंचन अबोधशिशुं पिता गंगातरणे नैपुण्यं प्रदर्शयतीति मत्वा उपेक्ष्य पश्चात्तप्यते तथा अस्मन्मित्रवृन्दोपि स्वोपेक्षाविषयये पश्चात्तापमनुभविष्यति ।

तदस्तु नाम । वयन्तु विद्मः असत्संकटम् । अतः संभूय यावच्छक्ति निरोद्धव्यः निष्कासयितव्यश्च शत्रुः ।

सन्तु नाम असद्देशे हिन्दवः मुसल्मानाः क्रैस्तवाः पारसीका बौद्धाश्च । सर्वेषामपि तेषां अस्मिन्नुपखण्डे मातृभूमिभावना समुद्भवेत् । यथा एकमतस्थोपि स्वमतस्थेनान्येन अभिभूयमानां स्वजननीं न उपेक्षते तथा मतमपुरस्कृत्य जन्मभूमि-भावनामेव सम्मान्य एतद्रक्षणाय यतेत । अपि च राजकीयवादिनः कांग्रेसीयाः समाजवादिनः स्वतन्त्राः जनसंघीयाः इत्यादयः बह्वस्सन्ति असद्देशे । एतेषां भावोपि शत्रुनिराकरणे एकमुखः भूयात । सर्वेपि भारतसर्वकाराय सहयोगमर्प-यित्वा तस्य उत्साहं वर्धयेयुः । समाजवादिनः केचित् स्ववादस्यैव प्राधान्यमर्प-यित्वा देशद्रोहायापि सन्नद्धा वर्तन्ते इति अहो दौर्भाग्यम् । मातृद्रोहिणां जनानां जयचन्द्रगतिरेव निर्णीता विद्यते । अथापि चरित्राभिज्ञा अपि ते चारित्रहीनाः कथं भवन्तीति न भासते ।

तादृशां अल्पाल्पानां चेष्टाः कीदृश्यो वा भवन्तु न तत्रास्माकं श्रद्धा । अलं भवामो वयं तदितरे संभूय भारतभूमिं रक्षितुं शत्रुं शिक्षितुं च ।

तदर्थमेतानि कार्याणि अस्माभिः कर्तव्यानि —

१. सर्वकारस्याज्ञाः शिरोधार्याः ।
२. योग्यैः गृहरक्षकदले प्रवेष्टव्यम् ।
३. अन्तःकलहप्रवृत्तयः निरोद्धव्याः ।
४. आहारधान्यादिप्रख्यापनेन सहायेन च जना आदर्तव्याः ।
५. शत्रुभिरुत्पाद्यमानाः वृथा मुधा भीकरवार्ताः निवारणीयाः ।

६. धनेन जनेन प्राणेन वा आत्मग्रामस्य नगरस्य वा रक्षणपरतन्त्रैः भाव्यम् ।

७. सेतूनां ह्रदादीन जलनिधीनां च अपायो वारणीयः ।

८. आत्मसैन्यशिबिरादिकं संगोपयेत् ।

९. संदेहविषयस्य शत्रोः तद्गूढचारिणो वा वार्ता रक्षकेभ्यः आवेद-नीया ।

१०. व्रणितानां पीडितानां वा जनानां यथाशक्ति रक्षणं पोषणं च कर्तव्यम् ।

११. तमोविपणिजीविनां सूचनं सर्वकाराय कुर्यात् ।

१२. आहारः मितत्वेनोपयुज्य सर्वकाराय सैन्याय देयः ।

१३. विलासवस्तूनां विदेशवस्तूनां चोपयोगः संक्षेप्यः ।

१४. यन्त्रालयेषु कार्यालयेषु च अनलसतया स्वकर्म निर्वर्तनीयम् ।

१५. विद्युच्छक्तेः विनियोगः न्यूनीकर्तव्यः ।

१६. युवानस्सर्वेऽपि सैन्ये निवेष्टव्याः ।

१७. कल्याणभोजनातिथिसत्कारादीनां व्ययः स्थगयितव्यः ।

१८. अडंबरः कार्येषु दूरीकर्तव्यः ।

१९. समयो मानयितव्यः, न विलम्बेत न त्वरेत ।

२०. नायकस्य वाङ्मानयितव्या क्रमशिक्षणेन ।

एवमादिनियमानां पालने वयं देशरक्षणे महदुपकृतवन्तो भवेम ॥



# इन्दुमतीस्वयंवरम्

## [ रचयिता - श्री पि. एम्. पद्मनाभशर्मा ]

( पूर्वानुबन्धः )

विदर्भजा – [ सक्रोधं ] जरठे, गच्छ, गच्छ ।
[ सुनन्दा युवराजसमीपं गच्छति । विद्रर्भजायुवराजयोः सुशीला-सत्यशीलयोश्च नयनानि परस्परं संयुक्तानि भवन्ति । राजानश्च सासूयक्रोधं परस्परं पश्यन्ति ]

सुनन्दा – [ राघवं निर्दिश्य ] आर्ये,

**रघोरयं विश्वजितः प्रयोक्तुः पुत्रः प्रदीपो द्युमणेः कुलस्य ।**
**विदर्भजेऽमुं सुगुणं वृणीष्व, रत्नं समागच्छतु काञ्चनेन ॥**

( रघुवंशात् )

[अपरं निर्दिश्य ] अयं तु .... [ इत्यर्धोक्ते विदर्भजा सासूयकुटिलं पश्यति । सुनन्दा च विरमति । युवराजं वीक्ष्य विदर्भजा शृंगार-लज्जां निरूपयति । सुशीला मधूकमालां बन्धयति । ]

[ नेपथ्ये ]

भोः भोः राजानः, अलंकृतोऽयं कल्याणमण्टपः । समा-गच्छन्तु सर्वे भवन्तः । अलंकुर्वन्तु समुचितानि आसनानि । पाणिग्रहणमहोत्सवं अनुभूयमानः युवराजोऽपि भवतु पट्टण-प्रवेशाभिमुखः ।

युवराजः – वयस्य, सत्यशील, सर्वस्यापि कल्याणस्य कारणं गन्धर्वराजस्यैव प्रसादः ।
[इति विदर्भजायाः पाणिं गृहीत्वा गच्छति । अन्ये राजानश्च परस्परं अवलोकयन्तः बहिर्गताः]

[ततः प्रविशति आकाशयानेन प्रियंवदो नाम गन्धर्वराजः]

गन्धर्वः – [ श्रुतिमभिनीय ] कुत्र मङ्गलनादः ? [अधोऽवलोक्य] अहो, मच्छाप-विमोचनं कृतवतः महानुभावस्य रघुकुलतिलकस्य युवराजस्य कल्याणमहोत्सवः । ( निपुणं निरूप्य ) कथं रघुकुलतिलकः

प्रस्थित एव। (श्रवणमभिनीय) कथं भेरीनिनादः ? (विचिन्त्य) प्रस्थानमेव स्यात्। (अवलोक्य) आः, युवराजपरिगृहीतामङ्गनामपहर्तुं कृतोद्यमाः राजानः रुन्धन्ति युवराजम्। अहो, मौर्ख्यं नाम राज्ञाम्। युक्तमुक्तमभियुक्तैः —

**मन्देतरस्मरमलीमसमानसानाम्**
**मन्युस्पृहादुरभिमानमदास्पदानाम्।**
**पापात्मनां कलुषतः कलितोदयानाम्**
**दोषाय दृष्टिरपि हन्त दुरीश्वराणाम्॥** (विश्वगुणादर्शात्)

(विचिन्त्य) कथं वा विजेष्यते एकाकी युवराजः। सर्वथा विजेष्यत्येव रघुकुमारोऽयम्। (अधोऽवलोक्य) अहो, सर्वैः संवृतः खलु अयम् (सहर्षं) तथापि —

**वहद्भिः सर्वशस्त्राणि राजभिः सर्वतो वृतः।**
**रघुसूनुरयं भाति यथा सिंहो गजैर्वृतः॥**

(भीतिनाटितकेन) आः, सर्वे राजानः शस्त्रैः प्रहर्तुमपि सन्नद्धाः। कथं वा संरक्ष्यते विदर्भजा ?

(सहर्षं) अहो, युक्तं कृतं युवराजेन। यत् विदर्भजां सुशीलासत्यशीलयोः निवेश्य, सिंह इव स्वयमपि युद्धाय व्यवसितः। (भयमभिनीय) कथं, न दृश्यते युवराजः ? हा, हन्त, सर्वैः समाक्रान्तः एकाकी। (सक्रोधम्) भोः भोः राजानः, न युक्तं भवताम् यदेकाकी संरुध्यते। (साशङ्कं) कथं, राजानः परित्यज्यायुधानि युद्धात् विरमन्ति। (निपुणं निरूप्य) (सहर्षं) अहो, मदुपदिष्टेन मोहनास्त्रेण सर्वानपि राज्ञः मोहयित्वा प्रतिनिवर्तते युवराजः। (सशिरःकम्पम्) साधु, राजकुमार, साधु, दिष्ट्या संमोहनास्त्रं प्रयुक्तं। भवतु। विदर्भजालिङ्गितं युवराजं पश्यामि।

[इति उद्भ्रांतकेनावतरति]

[ततः प्रविशति यथानिर्दिष्टः राजा]

**विदर्भजा** – दिष्ट्या जयलक्ष्म्या विजयते आर्यपुत्रः।

**राजा** – (सहर्षं) सुन्दरि,

**मन्दस्मितोदारमुखाद्यदा ते विनिर्गतं वाक्यमिदं जयेति ।**
**तदैव युद्धेन महाव्रणेऽपि कलेबरे जाग्रति लोमकानि ॥**

प्रिये, सर्वस्यापि कारणं गन्धर्वराजस्य प्रसादः ।

विदर्भजा – (साशङ्कम्) कोयं गन्धर्वराजः? (इत्यर्धोक्ते, गन्धर्वः उपसृत्य) दिष्ट्या जयलक्ष्मीसमागमेन प्रियामुखवीक्षणेन च वर्धते युवराजः!

राजा – (सहर्षं) अये, गन्धर्वराजः! (उपसृत्य) आर्य, भवदनुग्राह्यः रघुनन्दनः प्रणमति ।

विदर्भजा – आर्य, वन्दे ।

सुशीलासत्यशीलौ – आर्य, नमावः ।

गन्धर्वः – अचिरेणैव अनुभवतु पट्टाभिषिक्तः, पुत्रमुखलालनमहोत्सवमपि युवराजः । इन्दुमति! भर्तुः बहुमता, वीरप्रसवा भूयाः । मंत्रि-कुमारौ, युवामपि दीर्घायुषौ भवतम् ।

(इति क्रमेणाशिषं प्रयुङ्क्ते । तेऽपि शिरसा प्रतिगृह्णन्ति)

राजा – सर्वस्यापि मंगलस्य कारणं भवतः प्रसाद एव ।

गन्धर्वः – किं ते प्रियमुपकरोमि ?

राजा – अतः परमपि प्रियमस्ति? पश्य —

**संमोहनं नाम वरं महास्त्रम् प्राप्तं वधूरत्नमिदं तथैव ।**
**राज्ञां जयेनापि महद्यशश्च सर्वस्य मूलं भवतः प्रसादः ॥**

यद्यस्ति भगवान् प्रसन्नचित्तः, तर्हि इदमस्तु भारतवाक्यम् ।

**सन्तु प्रजाः पार्थिवभक्तियुक्ताः**
**भूपाः प्रजापालनतत्पराश्च ।**
**सर्वे सुधर्मे परिबद्धचित्ताः**
**सर्वान् सुधर्मः परिपातु कामम् ॥**

॥ इति शुभम् ॥

इति श्री पद्मनाभकविकृतिषु इन्दुमतीस्वयंवरं नाम एकाङ्क रूपकम् ।



# सुलभपाठमाला १४

## सर्वनामशब्दाः (इदंशब्दः)

अयं मम पिता। इमे मम भ्रातरः। इयं मम माता। इमाः मम भार्याः। इदं तव पुस्तकम्। इमानि तव पुस्तकानि। इमं पितरं अहं नमामि। इमान् जनान् त्वं आह्वयसि। इमां मातरं त्वं नमसि। इमाः बालिकाः अहं आह्वयामि। इदं फलं अहं भक्षयामि। इमानि पुस्तकानि त्वं पठसि। अनेन बालकेन किं पठितम्? एभिः बालकैः सह त्वं गच्छ। अनया बालिकया सह अहं पठामि। आभिः बालिकाभिः सम्यक् गीतम्। अनेन फलेन मम क्षुत् निवृत्ता। एभिः पुस्तकैः किं ज्ञातम्? अस्मै रामाय नमः। अस्मै फलाय प्रयतितव्यम्। एभ्यः विप्रेभ्यः दक्षिणां दद। एभ्यः पुस्तकेभ्यः अहं आगतवान्। अस्यै बालिकायै इदं पुष्पं दद। आभ्यः वनिताभ्यः इमानि पुष्पाणि अहं ददामि। अस्मात् मनुष्यात् अयं स्थूलः। अस्मात् फलात् इदं स्थूलम्। एभ्यः बालकेभ्यः इमे वीराः। एभ्यः पुस्तकेभ्यः इमानि सुन्दराणि। अस्य बालस्य, अस्याः देवतायाः इयं उत्तमा। आभ्यः लताभ्यः इयं सूक्ष्मा। अस्य बालस्य, अस्य पुस्तकस्य च कः सम्बन्धः? आस्याः बालिकायाः नाम किम्? एषां नराणां ग्रामः कः? एषां पुस्तकानां मूल्यं किम्? आसां बालिकानां पाठशाला का? अस्मिन् ग्रामे अहं वसामि। अस्मिन् फले माधुर्यं नास्ति। एषु ग्रामेषु चौर्यं नास्ति। एषु पुस्तकेषु हास्यं अस्ति। अस्यां पाठशालायां त्वं पटसि। आसु लतासु पुष्पाणि सन्ति। इमौ मम भ्रातरौ, इमौ अहं जानामि। इमे द्वे फले, इमे अहं भक्षयामि। इमे द्वे बालिके, इमे अहं आनयामि। आभ्यां नराभ्यां फलाभ्यां वनिताभ्यां वा किं प्रयोजनम्? अनयोः मनुजयोः पुस्तकयोः वनितयोः गुणान् अहं जानामि।

**अवधेयम्** – तृतीयाविभक्तिमारभ्य पुन्नपुंसकलिङ्गयोः साम्यम् वर्तते। प्रथमा-द्वितीयाविभक्त्योरेव तयोः भेदः। नपुम्सके प्रथमाद्वितीयाविभक्त्योः एकरूपता। द्विवचने तृतीयादिषु विभक्तिषु लिंगत्रयेपि एकरूपता। प्रथमाद्वितीयाद्विवचनयोः स्त्रीनपुंसकलिंगयोः साम्यम्।

# संस्कृतभाषाप्रचारिणी सभा, चित्तूरु.

# Samskritha Bhasha Pracharini Sabha, Chittoor.

## क्रोध्युत्तरायणपरीक्षणां फलितांशाः

## Results Of March Examinations 1965.

The following are the Registered Numbers of successful candidates who appeared for the Sanskrit Examinations held on 27th 28th and 29th March 1965 by the Samskritha Bhasha Prachrini Sabha, Chittoor.

### परिचयः PARICHAYA

First Class: — 503 505 512 514 515 517 576 577 615 666 695 669 706 711 721 723 725 729 744 793 802 803 804 806 807 808 810 811 812 832 839 868 869 870 871 872 876 877 878 881 882 887 909 918 and 934.

Second Class:— 450 451 456 457 468 472 474 492 494 495 496 497 500 502 504 507 511 513 516 518 530 561 575 579 580 583 585 587 590 594 595 621 624 625 627 628 630 636 637 653 669 677 696 700 701 702 704 707 713 714 715 716 728 730 733 737 738 740 741 746 747 764 765 766 773 774 777 783 790 792 794 809 813 838 858 873 874 875 880 884 886 893 908 912 915 916 991 920 and 932.

Third Class :— 449 460 469 470 477
486 489 490 491 498 499 508 510 520
522 525 531 532 556 562 581 582 591
592 596 600 623 626 629 633 638 665
673 675 676 698 710 720 726 727 731
734 735 739 742 743 748 763 767 769
770 771 772 775 776 778 779 780 781
782 805 833 836 848 849 850 885 892
894 896 897 898 913 914 917 921 923
927 928 and 929.

## अभिज्ञः ABHIGNA

First Class: — 438 453 455 501 567
604 606 646 680 681 682 687 817 818
819 820 822 823 824 and 825.

Second Class: — 441 452 454 543 568
569 642 643 644 645 650 655 656 679
685 717 719 732 749 752 754 755 756
757 758 759 760 761 762 788 799 814
815 816 821 827 830 841 843 846 889
890 904 905 910 and 925.

Third Class: — 440 475 537 538 540
544 545 546 551 553 570 573 601 608
610 611 613 647 648 654 683 684 686
718 750 751 753 784 785 787 797 798
826 828 829 840 844 845 861 900 902
and 906.

## विचक्षणः VICHAKSHANA

First Class: — Nil.

Second Class: — 442 444 572 657 658 659 660 662 688 689 190 and 961.

Third Class: — 443 555 661 800 801 863 864 865 907 and 911.

## समर्थः SAMARTHA

First Class: — Nil.

Second Class: — 445 446 and 447.

First Part Only: — 847 and 867.

Second Part Only: — 616 663 and 664.

## कोविदः KOVIDA

First Class: — 768 Only.
I and II Parts: — 926 Only.
I and III Parts: — 618 619 and 620.
I, II and III Parts: — 617 Only.
V Part Only: — 694 Only.

The followng are the names of the candidates who stood first in first class of the above examinations.

Prizes will be awarded to them in due course.

PARICHAYA :— No. 515 M. S. Choodamani, Crompet, Madras.

ABHIGNA :— No. 680, G. K.Ammani, T. Nagar Madras.

KOVIDA :— No. 763, Setharamji, Baroda.

उत्तीर्णाः 359

| परीक्षाः | अभ्यर्थिनः | उपस्थिताः | उत्तीर्णाः | | | |
|---|---|---|---|---|---|---|
| | | | प्र. श्रे. | द्वि. श्रे. | तृ. श्रे. | खण्डश |
| **परिचयः** | 308 | 249 | 45 | 89 | 80 | — |
| **अभिज्ञः** | 140 | 131 | 20 | 46 | 42 | — |
| **विचक्षणः** | 32 | 29 | — | 12 | 10 | — |
| **समर्थः** | 12 | 9 | — | 3 | — | 5 |
| **कोविदः** | 8 | 7 | 1 | — | — | 6 |
| | 500 | 425 | 66 | 150 | 132 | 11 |



## उपयुक्तानि परीक्षाकेन्द्राणि ३८

(१) अनन्तपुरम् (२) आल्लगड्ड (३) उप्पालपाडु (यं) (४) कदिरि (५) कावलि (६) कूचिपूडि (७) कोत्तपेट (८) कोयंबत्तूरु (९) क्रोंपेट (१०) गुंटूरु (११) चित्तूरु (१२) चिदंबरम् (१३) तंजावूरु (१४) तांबरम् (१५) तिरुवल्लिक्केणि (१६) तिरुनगर् (१७) तेरलंदूर (१८) त्यागरायनगर् (१९) नवदेहली (New Delhi) (२०) नेल्लूरु (२१) पेदनंदिपाडु (२२) पेद्दापुरम् (२३) प्रशान्तिनिलयम् (२४) बरोडा (२५) बोब्बिलि (२६) मचिलीपट्टणम् (२७) मधुरा (ए) (२८) मधुरा (बि) (२९) मंत्रालय (३०) मन्नार-गुडि (३१) मामिडिकुदुरु (३२) राजमहेन्द्रवरम् (ए) (३३) राजमहेन्द्रवरम् (बि) (३४) विजयवाड (३५) शाहपूर् (३६) श्रीरंगम् (३७) सेलम् (३८) हैदराबाद् ।

* हिन्दीप्रतिरोधोपद्रववशात् परीक्षातिथिपरिवर्तनेपि बहवः अनुपस्थिताः उपस्थिता अपि सम्यक् न समाहितवन्त इति खिद्यामहे ।

**के. श्रीनिवासाचार्यः,**
परीक्षामन्त्री.



# जननीजन्मभूमिश्च स्वर्गादपि गरीयसी
## ( यन्. शठकोपः )
### ( पूर्वानुबन्धः )

एकदा कालीमातुः करालमूर्तिं विस्मृशता केनचित् "यदीयं माता, किमिदमस्याः भयङ्करं रूपणम् ? जगति भयङ्करी माता कुत्राप्यास्ते वा ? "इति पृष्टः रामकृष्णपरमहंसः उवाच किल – " बाढम् । तव बुद्धौ एतावदेव स्फुरति, परम् आलोच्यतां तावत्–यत्, केनचित् प्रतिवेशिबालेन ताडितः कश्चित् बालः स्वमातरमुपसृत्य वृत्तान्तं यावन्निवेदयति, तदा सा मूर्धजान् विधुन्वन्ती रोषारुणिते नेत्रे विघूर्णयन्ती, कुटिलितभ्रुकुटिः दन्तान् दन्तैः सङ्घट्टयन्ती प्रतिवेशिबालमुपरोद्धुं महता आग्रहेण गच्छति चेत् तस्यास्तत् कोपेद्धं रूपं स्वतनयस्य आनन्दं जनयेत् ? उत भीतिम् ? एवमेव कालीदेव्याः करालाकृतिरपि न भक्तानां भयविधायिनी भवति " इति ।

शिशूनामुपरि पुष्पेऽपि पतिते आत्मनः उपरि दुस्तरप्रस्तरपातं मन्यमाना सा तेषां रक्षणे स्वप्राणानपि तृणाय मनुते । अतः माता न केवलं स्वर्गात्, किन्तु तदधिपादपि गरीयसी । अत एव " न मातुः परदैवतं" इत्युच्यते ।

पृथिव्याः गुरुतरा का ? इति यक्षेण पृष्टः धर्मात्मजः अपि माता इति समाधत्ते स्म इति महाभारते पठामः । इममेव विषयम् उपबृंहयन्ती काचित् पौराणिकी गाथापि अनुश्रूयते । यथा – एकदा ईश्वरः स्वतनयौ गजमुखषण्मुखौ अह–युवयोः भूप्रदक्षिणं कृत्वा प्रथमं मत्समीपमागतः जगति सर्वकार्याणामारम्भे पूज्येत इति । तच्छ्रुत्वा कुमारः मयूरमधिरूढः भूलोकं जगाम । सर्वज्ञः, पितुः अहीनः गजाननस्तु मातरं पार्वतीं त्रिः प्रदक्षिणीकृत्य पितुः आशीर्वादभाजनमभूत् । अनन्तरं भूप्रदक्षिणदक्षिणोऽहम् इति धिया समागतः कार्तिकेयः अग्रजस्य बुद्धिकुशलतामभिनन्दन्, आत्मनो व्यर्थकारित्वं च निन्दन् तूष्णीं बभूव इति ।

लोकोत्तरसौख्यप्रदः स्वर्गः इति कश्चित् लोकः वर्तते इत्येतत् ज्ञातुं अस्माभिः प्रथमं शरीरधरिभिर्भाव्यम् । शरीरं च मातृगर्भे एव निर्मीयते । माता तु अस्मच्छरीरं केन केन प्रकारेण कति वा बाधाः अनुभूय संवर्धयामास इत्येत तदात्वे ज्ञातुं वयं यद्यपि अशक्ताः तथापि आयत्यां अनुभवेन जनीमः । ततः अवश्यम् अस्माभिः अङ्गीकर्तव्यं भवति यत् मातैव पूज्यतमा प्रत्यक्षदेवता च

इति । अत एव अपौरुषेयो वेदोऽपि 'मातृदेवो भव' इति शासत् मातुरेव पूर्वरूपत्वं निर्धारयते। एवं श्रुतिस्मृतिपुराणेतिहासादिष्वपि मातुः प्राधान्यमेव जोघुष्यते। तथा लोकेऽप्यनुभूयते इत्यतः जननी स्वर्गापपि गरीयसी इत्येतत् निर्विवादमेव।

अथ जन्मभूमेरपि स्वर्गात् कथं गरीयस्त्वं इति विमृश्य उपसंहरिष्यामः। यस्यां भूमौ वयं जनिं लभामहे सा अस्माकं जन्मभूमिः। जन्मभूमिस्तावत् किञ्चिन्निर्वचनमपेक्षते, अन्यथा समन्वयो न सिद्ध्येत्। तथाहि सर्वोऽपि जनः प्रायः दशहस्तपरिमितवैशाल्यभाजि अरिष्टे (सूतिकागृहे) एव जायते। अतस्तावान् प्रदेश एव जातस्य जन्मभूमिः इति वक्तव्यं भवति। न हि तावन्मात्रस्य जन्मभूमित्वे किमपि प्रयोजनमुत्पश्यामः। जन्मभूमिः इत्युक्तौ ग्रामः, नगरं, देशो वा भवितुमर्हति। यथा अस्माकं भारतदेशे यस्मिन् कस्मिंश्चित् कोणे विद्यमानस्य कस्यचित् ग्रामस्य नगरस्य वा वस्तुतः जन्मभूमित्वेऽपि समग्रं भारतदेशम् अस्माकं जन्मभूमिरिति वयं प्रतीमः। अर्थात् एकविधाचारानुष्ठानपराजनाः यावत्पर्यन्तं निवसन्ति तावत्पर्यन्तं तत् तेषां जन्मभूमिरिति भावः।

एतादृशी जन्मभूमिः अपरेव जननी अस्मान् पोषयति। बहुविधफलवृक्षैः, सस्यैः, नदीभिः, ओषधिभिश्च अस्माकं यादृशमुपकारं करोति अस्मज्जन्मभूमिः, न वयं तस्य निष्क्रयं जन्मशतेनापि कर्तुं पारयेम। किं बहुना, यदाकदा वा भाविनं स्वर्गमुद्दिश्य प्रतिपालयतः अस्मान् इयं जन्मभूमिः सुफलैः सुजलैः संवर्ध्य स्वर्गप्राप्तिसमर्थान् करोति इत्युक्तौ अहो जन्मभूमेः अस्मदुपरि कियान् ममकारः। तदेतावदेव, स्वर्गप्राप्तिसाधनबोधकान् गुरूनपि इयमेव प्रपादयति। अन्यथा स्वर्गप्राप्तौ कथं वयं प्रवर्तामहे? अत एव जन्मभूमिः सर्वेषां पूजनीया भवति। जननीजन्मभूम्योः अधरोत्तरविचारे एतावत्पर्यन्तं प्रतिपादितं जनन्याः प्राथम्यं प्रतिसंहृत्य जन्मभूमेरेव तत् दातव्यमिति प्रतीयते। जन्मभूमेरभावे जन्मदात्री तपस्विनी जननी कथं नाम अस्मान् पोषयतु? तस्मात् सर्वैरपि स्वस्वजन्मभूमिः सर्वथा संरक्षणीया। इयमेव स्वधर्माचरणस्य वेदिः। यदि इयं पराक्रान्ता स्वधर्माचरणं नश्येत्। धर्माचरणाभावे पापं च नरकहेतुः प्रत्यहो कष्टपरम्परा। स्वर्गकामानां वेदचोदितेष्टसाधनताकरूपधर्माचरणमेव स्वर्गप्राप्तौ निदानम्। तादृशधर्माचरणं जन्मभूमिमन्तरा न सिद्ध्यति। जन्मभूमेश्च जननीहेतुः इति अन्योन्यं जननीजन्मभूम्योः प्राशस्त्यं निश्चप्रचं भवतीति युक्तं 'जननी जन्मभूमिश्च स्वर्गादपि गरीयसी' इति ॥

# राजाजीकथा १४



## न्यायालये चटकाः

( आ. वरदराजः )

माण्ड्लिकन्यायालये न्यायाधीशाः रामलिङ्गस्वामिमहोदयाः विवादं (case) विमृशन्ति स्म। यतस्ते तत्पदवीं इदंप्रथमतया अधिष्ठितवन्तः ततो हेतोः महोत्साहेन साक्षिभ्यः प्रश्नान् वारंवारं उपर्युपरि च पृच्छन्तः उभावपि न्यायवादिनौ उत्तेजयामासुः। अतिनूतनतया कार्यान्वितं विवाहविघटनशासनमधिकृत्य प्रवृत्तोऽयं विवादः।

वादिनी भार्या; प्रतिवादी भर्ता। तयोर्विवाहितयोः सार्धस्संवत्सरोऽतीतः। भर्तुः स्वस्याश्च आनुकूल्यं नास्तीति तदीयानां गुणानां स्वस्वभावस्य च सुतरां आनुगुण्यं नास्तीति विवाहविघटनमावश्यकमिति भार्याया वादः।

प्रतिवादीदं नांगीचकार। नैवमिति आक्षिपत् वादिन्याः न्यायवादी ब्रह्मलिङ्गमहोदयः। वयसाऽवरोऽपि वावदूकः न्यायसूक्ष्मताकोविदश्च। प्रतिवादिनो न्यायवादी वासुदेवरायः वृद्धः पुरातनफक्किकश्च।

साक्षिणां विचारणे प्रवृत्ते द्वौ चटकौ न्यायालये उपरि गवाक्षसमीपे उपविश्य किचकिचारावं कुरुतस्स्म। वासुदेवरायेण साक्षिणः कथनं सम्यक् न श्रुतम्। तस्य किञ्चिदिव बधिरता प्राप्तेव। अतः स वारं वारं किमिति किमिति पुनः पुनः पृच्छन्नास्त। चटकानां कलकलः प्रवृद्धः – इत्याहुः न्यायाधीशाः रामलिङ्गस्वामिनं प्रति।

वराका अमी जनाः, इत्थं विवाहविघटनाय विवादानुपस्थापयन्ति – इति चटकाः परिहसन्तीति वासुदेवरायः प्राह। ततः परं चटकाः ततोऽप्यधिकं हसितुं आरभन्त। न्यायवादिनः कथनं तेषां विदितप्रायमासीत्।

"किम्? त्वमपि न्यायालयं गमिष्यसि" – इत्याह चटकः स्वकान्तां प्रति। "छी! छी! न कदापि गमिष्यामि" – इत्याह सा।

एषां चटकानां राभस्येन प्रकृतो विवादः सर्वथा भ्रश्यतीति ब्रह्मलिङ्गमहोदयस्य विचारः। वासुदेवरायस्तु हसन् एव साक्षिणः वक्रप्रश्नान् (पुनः परामर्शप्रश्नान्) पृच्छति स्म।

विवादविचारणं स्थगितं क्रियेत चेत्सम्यग्भविष्यतीति मत्वा "भ्रमतीव च मे शिरः"इति वाग्दानं (वायिदां) समयदानं च अभ्यर्थयामास वादिन्या न्यायवादी। शिरो भारेण भ्रमतीति वादिन्या न्यायवादिनि उक्तवति सति तपस्वी वासुदेवरायः पुनः प्रष्टुमाक्षेप्तुं वाऽवकाशं न लेभे।

यूनां सर्वेषां एतादृशा व्यथयः कुतो वा आगच्छन्ति? इति परं पृष्टं तैः।

एतेषां अपत्यानि न सन्तीति द्योतते। यद्यपत्यानि स्युः एवं विवदेत किं सा भार्या – इत्याह चटका।

तदाऽपि विवादमुपस्थापयेत् – इत्याह चटकः।

तदनन्तरं "मास्तु नः सम्पर्कः सहैतादृशैः" इति चटकः तत उत्थाय प्रस्थाय पार्श्वस्थं भवनं प्रति उत्पतितः। चटकाऽपि तमनुगता।

एषां चटकानां संस्करणसमाचाराः सर्वथा नैव विदिता नरैः इति मन्ये। तेषां समाजे प्रचारः कर्तव्यः – इत्याह तत्रत्यः कश्चिद्वानरः।

# विश्वावसुदक्षिणायनपरीक्षाकार्यक्रमः

# (Examinations of September 1965.)

*The programe of the forth-coming examinations of the Samskrita Bhasha Pracharini Sabha, Chittoor is tabled as follows :—*

| सशुल्कं आवेदनपत्र-स्वीकरणस्य अन्तिमतिथिः<br>Last date to receive applications & fees | प्रत्यावेदनपत्रं ५० पै० विलम्बशुल्केन सह आवेदनपत्रस्वीकरणस्य अन्तिमतिथिः<br>Last date to receive applications with penalty @ 50 Ps. | परीक्षातिथयः<br>Dates of Examinations. |
|---|---|---|
| 20—7—1965 | 31—7—1965 | 4, 5, 6 September 65. |

सं. भा. प्र. सभा, चित्तूरु.
S. B. P. Sabha, Chittoor.
*15—5—1965.*

की० श्रीनिवासाचार्यः,
परीक्षामन्त्री - Parikshamanthry.

# अन्यायराजप्रहसनम्

## रचयिता — महाकवि श्री व० रामानुजाचार्यः

### नान्दी

कालिन्दीह्रदजातकाळियफणारंगस्थले नृत्यतो
नृत्यत गोपसुतस्य कामजनकस्यांग सदा वोऽवतु ।
वीरावेशविजृंभितं प्रविहसद्गोप्यौघवक्षोघटाः
यद्दृष्ट्वा ननृतुर्न एव सुमहत्प्रत्यापकं स्यादिति ॥

गुरुं प्रपन्नसन्तानबीजं गृह्णामि यद्ग्रहात् ।
लभतेऽन्यैरलं नित्यानन्दरूपफलं पुमान् ॥

नान्द्यन्ते

सूत्रधारः — (नेपथ्याभिमुखमवलोक्य)

नृत्यन्तमनुनृत्यन् मां छायामण्डलकोशवत् ।
अनुजः कुत्र मे यातो नटवीरो महोदरः ॥

(प्रविश्य)

नटः — भाव एषोऽस्मि ।

रंगं प्रविष्टो यदि सूत्रधारो दैवं प्रणम्याथ सभां च विद्वान् ।
नृपागमं च प्रतिवीक्षमाणो जयाशिषस्तस्य बहु प्रयोज्याः ॥

ततो निवेदयेत् स्वीयजनाभीष्टं च राजनि ।
बद्धश्वेव वसेत द्वारि सेवाकालेऽभिरक्षकः ॥

इत्युक्तसूत्रधारलक्षणमतिक्रम्य ।

कुरु पिष्टान्ननृत्यं त्वं इत्युक्तं केनचिद्यदि ।
मोदकस्याप्यहं कुर्यां नर्तनं निपुणोऽद्य हि ॥

इतिवत आत्मप्रशंसां परित्यज्य प्रथमं देवस्तुतिं कुरु ।

सूत्र — मार्जाररक्षिणशशकुन्तावलोकनवत् अवां अपरित्याज्यावेव । आवाभ्याम् तत् को देवः स्तुतिपात्रीकरणीयः ?

नटः — भाव, लोके आदौ विनायको विघ्नराज एव स्तोत्रीक्रियते ।

सूत्र — (सहासं)

वीथीषु वेदीषु तटाकतोय-
बन्धादितीरप्रमुखेषु गच्छताम् ।
आगच्छतां चाप्युदरं प्रदर्शयन्
विराजते मोदकवत् स एषः ॥

आदावेव गजाननोह्यसदिति ख्यातश्च मद्वत् स्वयं
लभ्या मातृसमैव रूपसुगुणैः भार्येति जल्पन् मया ।
एकाकी वटुरेव वेश्मगृहिणीपुत्रादिशून्योऽधुना
प्यासीनस्तरुकोटरेषु विशिखारन्ध्रेषु तिष्ठत्यसौ ॥

तत् एतत्स्तोतृणामपि एतादृशी गतिरेव । तथापि एतदनुज्ञपितरौ यदि स्तोत्राविषयौ तेन अस्माकमपि काषायपञ्चाक्षरशीतोदकलाभ एव भवेत् न प्रसादलाभः । तत् एतद्दर्शनमपि न कार्यसिद्धिकरम् ।

नटः – (सक्रोधमिव) भाव, लोकाचार एव मभोक्तः । इतःपरं यथा-भावाभिप्रायं करणीयम् (अथवा) भवता भवत्पादावेव संसेव्यौ इयदेव मम विदितम् ।

सूत्र – (सस्मरणं) अस्मदुक्तदेवानामपि देवः कश्चिदस्ति । स एव आहारदेवः । तदालय एव सर्वदा अनेकविधभक्ष्यभोज्यादयः यावत्तृप्ति लभ्याः । तद्देवस्तुतिरेव एतत्ग्रन्थकर्त्रा आस्मिन्नान्दीत्वेन निबद्धा । शृणु कालिन्दीह्रद .... स्यादिति ॥ इति ।

नटः–किन्नामायं ग्रन्थः? कः कविरेतत्प्रणेता? कुत्र च सभेयं समवेता ?

सूत्र –

पाण्डवसारथिसुमहे कैरविणीतीरमण्टपे महिते ।
समवेतेयं परिषत् विबुधानां हास्य नित्यतृप्तानाम् ॥

पण्णातीरे सत्रनामाग्रहारे
ऽवात्सीत् श्रीमान् श्रीवराहार्यसूरिः ।
वात्स्यश्रीमद्रंगरामानुजानां
योगीन्द्राणां पादपद्मैकचित्तः ॥

रामानुजः कविवरस्तत्तनयोऽसौ विराजत इदानीम् ।
श्रीवासयोगिवर्यान् तदाज्ञायाऽवाप यस्स्वयं शरणम् ॥

[क्रमशः]

# भारतीयनारीहृदयम्

यस्. विजयरायः, अनंतपुरम्.



मदीयमिति मन्तुं योग्यं वस्तु कमलायाः अस्मिन् जगति केवलं पुत्रत्रयं आसीत् । सा ग्रामस्य बहिर्भागे जीर्णे कुटीरे वसति स्म । गीष्मकाले सूर्यः तस्मिन् कुटीरे नृत्यति स्म । तथैव शीतकाले कुटीरोऽयं हिमाक्रान्तः आसीत् । पुत्रश्रेयोर्थिनी केवलं सा जीवति स्म । परन्तु नासीत्तस्याः या काप्यन्या आशा ।

सा दिनमेकं युगमिव यापयति स्म । जन्मप्रभृति तस्यां नासीत् या काप्याशा अथवा यःकोप्यानन्दः । सा दीना भैक्षवृत्या स्वपुत्राणां पोषणं करोति स्म । ईदृशीं दीनावस्थां प्राप्ताया अपि तस्याः हृदये भारतीयस्त्रीत्वस्य शैथिल्यं नाभवत् । प्रतिदिनं प्रातःकाले भिक्षार्थिनी गृहं गृहं अटित्वा स्वकीयं भिक्षाकपालं प्रसार्य याचते स्म । यल्लभ्यते ससन्तोषं सा सपुत्रैर्भक्षयति स्म । एवं स्थिते एकः धनाढ्यः रामेश्वरः तामकामयत । परन्तु कमला तावत् सा भारतीयनारी । विंशतिवर्षीयायाः तस्याः भर्ता तस्याः बाल्यवस्थायामेव मृतः । तत्प्रभृतीयं बाला वैधव्यं वहति स्म । परन्तु कथं वा अंगीकरोति भारतीयनारीहृदयं नष्टेपि भर्तरि द्वितीयं परिणेतुम् ।

सा भिक्षुकी चेदपि तस्याः, अन्यस्या इव हृदयं भविष्यत्येव यस्मिन् स्नेहः, दया, माया, लोभः, क्रोधः, चिंता, एवमादयः परस्परं स्पर्धन्ते । तस्मिन्मनसि प्रश्नपरंपराः आविर्भवन्ति स्म । लोके सर्वैरपि ज्ञात एव किल अयं विषयः "तृणल्लाघुतरस्तूलः तूलादपि च याचकः" इति । तां दीनां दृष्ट्वा कैश्चन अन्नं दीयते, कैश्चन परिहस्यते । केचन तां नीचां मन्वते स्म, केचन दूषयन्ति स्म । एकदा तां काचित् एवं धिक्कृतवती "भिक्षुकी भवसि, तवापि संततिः भवति । लज्जा नास्ति वा, प्रलपसि । निर्गच्छ मदीयगृहद्वारात्" इति ।

सा गृहं गृहं अन्नार्थिनी पर्याटत् । परन्तु किंचिदपि न लब्धं दुरदृष्टवशात् । सा किं वा कुर्यात्? कर्तव्यविमूढा भूत्वा एकत्र अतिष्ठत् । क्षुधा

पीडिताः सर्वे पुत्राः आक्रोशन्ति स्म। रामेश्वरः ज्ञातवृत्तान्तः छन्नो भूत्वा आहार-पदार्थैस्सह दासीं कमलायाः सन्निधिं प्रैषयत्। दासी कमलां दृष्ट्वा "कमले, गृहाण, रामेश्वरेण प्रेषितं इदं" इति वारं वारं तत् गृहीतुं प्रार्थयत, बहुधा समाश्वासयामास च। परन्तु सा एतानि वचनानि नांगीचकार।

विफला दासी गृहं प्रत्यागच्छत्। अत्र कमलायाः पुत्राः उच्चैर्नादेन मातः, मातः इति विलपन्ति। किं वा करिष्यति सापि स्वयं क्षुधा पीडिता, अबला दीनावस्थायां स्थिता। कमला किमपि कर्तुमशक्ता सुदीर्घमालोच्य सपुत्रा रामेश्वरस्य गृहमगच्छत्। रामेश्वरः इमां वार्तां श्रुत्वा आनन्दभरितः, आश्चर्य-चकितः नेत्रे विस्फार्य कमलामद्राक्षीत्। तस्याः मुखे न पत्नीभावः दृश्यते, किन्तु पुत्रवात्सल्यमयी आकृतिः दृश्यते। तदा रामेश्वरस्य मनसः परिवर्तनमभूत्। सः स्वयंकृतापराधं ज्ञात्वा स्वल्पदूरं पृष्टतः गत्वा तामवन्दत।

पश्यन्तु महानुभावाः, भारतीयस्त्रियः हृदयं कथं पुत्रवात्सल्ययुतं मातृ-भावपूरितं च॥

# मुक्तके

## संकलयिता — मा. शिवरामराजः

"मुद्रानां बहुमूल्यमाप्य वणिजस्त्वन्यायधान्यापणे
तन्मातुं न्यदधादधोमुखमथ प्रस्थं स विक्रायकः।
क्रेता चोर्ध्वमुखं न्यधत्त स तयोरासीद्विवादो महान्
सभ्यैस्तन्निरणायि तन्नहि तिरश्चीनेन मुद्रार्पणम्"॥

"प्रासादे सा पथि पथि च सा पृष्टतः सा पुरः सा
पर्यङ्के सा दिशि दिशि च सा तद्वियोगातुरस्य।
अम्हो! चेतः प्रकृतिरपरा, नास्ति मे क्वापि सा सा
सा सा सा सा जगति सकले, कोऽयमद्वैतवादः"॥

# महाकविर्जयदेवः

"साहित्यभूषणम्" पडाल ब्रह्मारेड्डिः,

कोंकुदुरु, पूर्वगोदावरी.



संस्कृतसाहित्ये 'गीतगोविन्दम्' नाम काव्यमतिप्रशस्तं भक्तिरसपूर्णञ्च विराजतेतराम्। अस्य निर्माता महाकविर्जयदेवो मातापित्रोर्नामपार्थक्यात् चन्द्रलोकप्रसन्नराघवनाटकरचयितुर्जयदेवाद् भिन्न एवास्तीति निश्चीयते "श्रीभोजदेवप्रभवस्य रामादेवीसुतश्रीजयदेवकस्य। पराशरादिप्रियवर्गकण्ठे श्रीगीतगोविन्दकवित्वमस्तु"॥ इति गीतगोविन्दस्थश्लोकाद् ज्ञायते यद् गीतगोविन्दकारस्य माता रामादेवी पिता च भोजदेव इति। चन्द्रालोकप्रसन्नराघवकारस्तु महादेवात् सुमित्रायामुत्पन्न इति चन्द्रालोकात् प्रसन्नराघवनाटकतश्च प्रतीयते। गीतगोविन्दकारो जयदेवः १११६ खीस्ताब्दवर्तिनो वङ्गदेशनरपतेर्लक्ष्मणसेनस्य सभायां कविरासीत्। द्वादशसर्गात्मकस्य काव्यस्यास्य विषये निम्ननिर्दिष्टः श्लोक एवालम्—

"यदि हरिस्मरणे सरसं मनो, यदि विलासकलासु कुतूहलम्।
मधुरकोमलकान्तपदावलीं शृणु तदा जयदेवसरस्वतीम्"॥

कस्यचिदांग्लेयसंस्कृतविदुषः सम्मतं यद् गीतगोविन्दकाव्यस्यानुवादाय (ऋते संस्कृतम्) संसारस्थाः सर्वा भाषा नितान्तमसमर्थाः इति। महनीययशसः अस्य महाकवेः जयदेवस्य विषये निम्नोलिखिता कथा कर्णाकर्णिकया श्रूयते—

श्रीजगन्नाथपुरी निकटवर्तिनि केन्दुबिल्वग्रामे कस्मिंश्चिद् विप्रपरिवारे महाकविः जयदेवः आसीदुत्पन्नः। स बाल्यात्प्रभृति भगवतः जगन्नाथस्य परमभक्त आसीत्। सर्वदा जगन्नाथस्य सङ्कीर्तनमाराधनञ्च भक्त्या कुर्वन्नासीत्। भगवतः कृपया जयदेवः संस्कृतभाषायां प्रकाण्डपाण्डित्यं लब्धवान्। अथ जयदेवो जगन्नाथमधिकृत्य भक्तिरसप्रपूरितं कोमलकान्तपदावलिसम्पूरितं कमनीयभावनासम्पूर्णञ्च

'गीतगोविन्द' नामकमेकमद्भुतं काव्यमरचयत्। अचिरादेव काव्यस्यास्य विस्तारेण सह जयदेवस्य कीर्तिरपि सर्वत्र व्याप्नोत्। सर्वे भक्ताः तद् गीतकाव्यं भक्तिरसप्रपूर्णमत्यन्तादरेण पठन्ति स्म।

तदा जगन्नाथपुरीं सात्यकिनामकः एको विद्वान् भक्तश्च भूपालः शास्ति स्म। सोऽपि भक्तिरसपूर्णमेकं गीतकाव्यमरचयत्। परन्तु तस्य काव्यस्य गुणः चन्द्रमसः समक्षेत्रस्थायाः तारायाः प्रकाश इव प्रजानां मनो नाकर्षत्। यद्यपि सात्यकिः स्वकृतेः प्रभूतप्रचाराय भृशमयतत, तथापि सुगन्धपुष्पवरस्यापेक्षया ललितं निर्गन्धपुष्पं इव सा न प्रशस्ता अभवत्।

तयोर्गीतिकाव्ययोः श्रेष्ठत्वं निर्णेतुमेकः उपायः आलोचितः यज्जयदेवस्य कृतिं सात्यकेः कृतिञ्चमन्दिरे भगवतः जगन्नाथस्य चरणकमलसन्निकर्षे न्यक्षिपन्। तथा कृत्वा मन्दिरस्य कवाटावरोधः कृतः। भक्ताः सैनिकाश्च साक्षिणो भूत्वा रात्रौ मन्दिरनिकट एव अजागरुः। यदा प्रातः दर्शनोत्सुका मन्दिरे प्राविशन्, तदा ते अपश्यन् यज्जयदेवस्य 'गीतगोविन्दम्' गीतिकाव्यं तु भगवतः जगन्नाथस्य पादपद्मसन्निकर्षं तिष्ठति, परन्तु सात्यकेः कृतिर्दूरं प्रक्षिप्ता वर्तते इति। अपमान-मसहमानो राजा सात्यकिरात्महत्यां कर्तुमैच्छत्। अथ जगन्नाथः प्रत्यक्षीभूय सात्यकिमब्रवीत् यत् तव कृतौ स्थितान् चतुर्विंशतिं श्लोकान् प्रशस्तान् जयदेवस्य कृतौ सम्मेल्य कीर्तिमक्षयामाप्नुहि इति।

जगन्नाथपुर्यां कश्चिद् ब्राह्मणभक्त आसीत्। तस्य पुत्रिका पद्मावती-नामधेया सर्वसुलक्षणलक्षिता ललितरूपा जगन्नाथाय दातुं निश्चिता। स्वप्ने जग-न्नाथबोधितेन ब्राह्मणेन सा पद्मावती जयदेवाय समर्पिता।

जयदेवस्य यशः आकर्ण्य वङ्गदेशनरपतिर्लक्ष्मणसेनस्तस्य शिष्योऽभवत्। सम्प्रार्थितो जयदेवो नृपनिकट एव आत्मनः निवासमूरीचकार। राजमहिषी अपि पद्मावतीमाद्रियते भृशम्। एकदा कश्चिद् भृत्यो महिष्यैन्यवेदयत - "भवद्भ्राता युद्धे अम्रियत, शोकार्ता पतिव्रता तत्पत्नी अपि सहगमनं कृत्वा मुक्तिं प्राप्तवती" इति। तत्रस्थाः सर्वाः चेटिकाः शोकार्तायै राजमहिष्यै समवेदनां प्रकटीकुर्वन्त्यः भ्रातृजायायाः पातिव्रत्यं भृशं प्राशंसन्। पद्मावतीमीषदालोचनामग्नामवलोक्य राजमहिषी अपृच्छत् यत् त्वं तु किमर्थं समवेदनां न प्रकटयसि. न च तस्या

पातिव्रत्यमपि प्रशंससि" इति। पद्मावती प्रत्यभाषत– "भवद्भ्रातृमरणसमाचारश्रवणाद्दुःखिन्या मया मम वेदनां प्रकटीकर्तुं नापार्यत। भर्तरि मृते सहधर्मिणी सहगमनं कृतवत्यतः अस्मिन् का विशेषताऽस्ति? यदि पत्यौ प्रेमातिशयोऽभविष्यत् तदा पतिमरणसमाचारश्रवणमात्रेणैव तया मर्तव्यम्" इति।

अथैकदा राजमहिषी पद्मावती अन्या अबलाश्च परस्परं संलपन्ति स्म। तदा कश्चिद् रक्तसिक्तवस्त्रहस्तो दुःखवदनो भृत्य आगत्याब्रवीत्– "यदा अरण्ये कश्चिद् मृगमनुसरन् महाराजः ईषद्दूरं गतः, तदा सहसा केनचिद् दुष्टेन व्याघ्रेण जयदेवो व्यापादितः। जयदेवस्य स्वर्गवासवार्तां देव्यै पद्मावत्यै झटिति कथयेति मामादिश्य तस्य वस्त्रं दत्वा च शोकविह्वलः महाराजः अपि पश्चादागच्छति" इति। यावत् पतिव्रता पद्मावती समाचारमिममश्रृणोत्, तावदेव हा नाथेति वदन्ती प्राणान् अत्यजत्। राजमहिषी शोकसागरनिमग्ना सञ्जाता यतः सा भृत्यमलीकमवाचयत्।

यदा महाराजो जयदेवेन साकमरण्यात् प्रनिनिवृत्तः, तदा सर्वं वृत्तं ज्ञात्वा आत्महत्यां कर्तुमारभत। भूपालो जयदेवेन कृच्छ्रेण व्यापारादस्माद् विरमितः। ततः जयदेवः पत्नीमृतकलेबरसमीपं गत्वा 'गीतगोविन्दम्' काव्यमत्यन्तभक्त्या उच्चैः पठितुमारभत। भक्त्या पठितानि गीतगोविन्दस्य गीतानि श्रुत्वा भृशं प्रसन्नो भगवान् जगन्नाथः पद्मावतीं पुनरजीवयद् अवदच्च यद् यः गीतगोविन्दकाव्यं भक्त्या पठेत्, सोऽवश्यं दुःखानि तरेदिति। द्रष्टारः श्रोतारश्चाश्चर्यचकितान्तरङ्गाः सञ्जाताः।



# वाणीं भजत गैर्वाणीम्

रचयिता — श्री कुण्टिमद्दि शेषशर्मा



वाणीं भजत गैर्वाणीमज्ञानध्वान्तनाशिनीम् ।
यदपाङ्गलवासङ्गाद्वैधेयः कोविदायते ॥

आसेतुशीतभूमीध्रान्नरीनर्ति विश्रृङ्खलम् ।
आजातकर्माऽऽचान्त्येष्टि यदीया वैजयन्तिका ॥

पुष्णाति निखिला भाषाः गौर्गैर्वाणी प्रसूरिव ।
पदार्थान् सकलान् दत्वा चारयन्ती पदे पदे ॥

सर्वासामार्यभाषाणां द्राविडीनामनारतम् ।
अन्तर्जीवनधारा या, याऽऽलम्बनकशेरुका ॥

वैहङ्गमाश्च कापेया अभविष्यन् गिरोऽखिलाः ।
नाऽभविष्यन्दयापांगा गैर्वाण्या मधुरा यदि ॥

कालेनैतावता प्रत्यगधिकाराद्विनिर्गता ।
गैर्वाणी नैजमास्थायाऽनूचानं प्राभवं पुनः ॥

स्थानीयेषु च पल्लीषु प्रासादेषु कुटीष्वपि ।
देदीप्यतां भारतीयभद्रासनमधिष्ठिता ॥

अस्माकं भारतीयानां धर्म एष परात्परः ।
आर्षाधमर्ण्यसर्वस्वनिर्यातनसमुद्यमः ॥

पठन्तु च महाभागाः गैर्वाणीं पाठयन्तु च ।
तस्मान्नक्तंदिवं यूयमृषिगोत्रसमुद्भवाः ॥

या चैका भारतीयानां देशभाषात्वमर्हति ।
वन्दामहे तां गैर्वाणीं रसपीयूषतुन्दिलाम् ॥



# संस्कृतविषये प्रमुखनायकानां
# अभिप्रायाः

( संस्कृप्रचारकपत्रस्य सौजन्येन )



## श्रीमतः लालबहादुरस्य शास्त्रिणः भाषणम्

नवदिल्ल्याः एकस्यां सभायां भाषणं कुर्वता प्रधानमन्त्रिणा श्रीमता शास्त्रिणा भाषितम् – भारतस्य भारतीयता, या संस्कृते निहिता वर्त्तते, पूर्णरूपेण जागृता कर्त्तव्या । तस्यां दिशायां शासनेन जनैश्च पूर्णः प्रयत्नः विधातव्यः । संस्कृतभाषायां उच्चतमा शिक्षा, तस्याः प्रसारः विकासः उन्नतिश्च अस्माकं हृदयस्य वार्त्ता । अनया भाषया मम प्रेम इयत् वर्त्तते यत् प्रधानमन्त्रिपदे आरोहणानन्तरं सर्वाभ्यः संस्थाभ्यः अहं स्वं पृथक् अकरवम्, परं अनया मम सम्बन्धः यथापूर्वः एव वर्त्तते ।

स प्रत्येकस्मिन् राज्ये संस्कृतविश्वविद्यालयस्य स्थापनविषये उक्तवान् यत् प्रांतीयशासनानि स्वकीयप्रान्तेषु संस्कृतविश्वविद्यालयान् स्थापयितुं समर्थानि यदि राज्येषु संस्कृतविश्वविद्यालयानां स्थापना सम्भाविनी न स्यात् तर्हि संस्कृत-महाविद्यालयाः तु अवश्यमेव स्थापनीयाः ।

## श्री देशमुखस्य भाषणम्

अस्मिन् एव अवसरे दिल्ली - विश्वविद्यालयस्य उपकुलपतिना श्रीमता चिन्तामणिदेशमुखेन त्रिभाषायोजनायां संस्कृतस्य स्थानाय प्रतिवेदनं कृतम् । श्री देशमुखेन संस्कृते कवितया अयं प्रस्तावः प्रस्तुतः यत् संस्कृतस्य वृद्ध्यर्थं संस्कृतस्य अध्यापनम् आवश्यकम् ।

## श्री चागलामहोदयस्य भाषणम्

केन्द्रीयशिक्षामन्त्रिणा श्रीमता एम्. सी. चागलामहोदयेन मुम्बापुर्यां कथितम् — यत् अद्यत्वे विद्यार्थिभ्यः या शिक्षा दीयते सा तावत् अपूर्णा एव कथयिष्यते यावत् विद्यार्थिभ्यः भारतस्य प्राचीनायाः संस्कृतेः ज्ञानं न कार्यते ।

इदं महत् राष्ट्रियं कर्म । अस्य महत्त्वम् एतदर्थमपि वर्तते यत् भारतीया संस्कृतिः विभिन्नानां संस्कृतीनां संगमः विद्यते ।

एकस्याम् अन्यस्यां सभायाम् इन्द्रप्रस्थे स एव उक्तवान् — वयम् आधुनिकाः भवितुं वाञ्छामः, किन्तु अस्माभिः इदं सदा स्मर्तव्यम्, यत् वयम् एकस्याः महत्याः संस्कृतेः उत्तराधिकारिणः, तस्याः संस्कृतेश्च महत्त्वपूर्णमंगं वर्तते — संस्कृतभाषा इति ।

## श्री विष्णुदत्तशर्मणः भाषणम्

राजस्थानप्राच्यविश्वविद्यालयसमितेः अध्यक्षेण श्रीमता विष्णुदत्तशर्मणा दिल्लयाम् एकस्यां सभायां कथितम् यत् राजस्थाने प्राच्यविश्वविद्यालयस्य स्थापना शीघ्रमेव भविष्यति । तस्मिन् संस्कृतम् अतिरिच्य आयुर्वेद-ज्योतिषविषयानां विश्वविद्यालयीयस्तरे शिक्षायाः समुचितः प्रबन्धः विधास्यते ।

श्री शर्मणा उद्घोषितं यत् भारते संस्कृतशिक्षायाः क्षेत्रे उत्तरप्रदेशमनु राजस्थानं वर्तते । सम्पूर्णे देशे राजस्थाने एव संस्कृतशिक्षायाः समुन्नत्यै अतिरिक्तसंस्कृतशिक्षानिर्देशालयस्य स्थापना विहिता ।

## श्रीमत्याः कमलारत्नम् महोदयायाः भाषणम्

समारोहस्य प्रमुखेन अतिथिना श्रीमत्या कमलारत्नम् महोदयया रूस, चिली, ब्राजील - प्रभृतिविदेशेषु निवासावसरे तत्रत्यव्यक्तीनां साहित्यकाराणां च संस्कृतं प्रति दृष्टायाः श्रद्धायाः विवेचनं कुर्वन्त्या संस्कृतस्य अन्तराष्ट्रियं महत्त्वं ज्ञापितम् ।

## श्री डी. डी. उपाध्यायस्य भाषणम्

'आधुनिकानां भारतीयभाषाणां समृद्धज्ञानाय संस्कृतस्य ज्ञानम् अनिवार्यम्'। इमे शब्दाः नवदिल्ल्याः नगरपालिकायाः शिक्षाधिकारिण्या श्री डी. डी. उपाध्यायेन संस्कृतनाट्यसमारोहस्य उद्घाटनं कुर्वता कथिताः। तेन कथितं न इदम् आवश्यकं यत् भारतस्य प्रत्येकः जनः संस्कृतस्य विद्वान् स्यात्, परं संस्कृतस्य परिचयः तु सर्वेषामेव भवितव्यः।

## श्रीमतः भक्तवत्सलस्य भाषणम्

मद्रासस्य मुख्यमन्त्रिणा श्रीमता भक्तवत्सलेन उज्जयिन्यां घोषितं यत् मद्रासप्रशासनेन राज्ये संस्कृतम् ऐच्छिकविषयः निश्चितम्।

अखिलभारतीयकालिदाससमारोहस्य समाप्तौ पुरस्काराणि वितरता तेन महोदयेन उक्तम् – संस्कृतस्य अध्ययनं विकासश्च देशाय अत्यन्तं लाभकारि वर्तते। राष्ट्रकवेः कालिदासस्य अमरकृतयः राष्ट्रीयैकतायै अत्यन्तं शक्तिशालीनि साधनानि वर्तन्ते। अस्मिन् समये देशस्य एकतायै अखण्डतायै च अभितः एव भयं विद्यते। तस्याः रक्षा संस्कृतेनैव भवितुं शक्ता।

## डाक्टर सम्पूर्णानन्दस्य भाषणम्

राजस्थानस्य राज्यपालमहोदयेन डाक्टर सम्पूर्णानन्देन जयपुरस्य एकस्यां सभायां वैदिकसाहित्यस्य समुन्नत्यै देशवासिभ्यः अभ्यर्थना कृता।

राज्यपालेन प्राचीनरीत्या विद्याध्ययने बलं ददता आशा प्रकटिता यत् गुरुमुखात् जायते तत् विद्यालयेषु महाविद्यालयेषु च कतिपयघण्टाध्ययनेन न भवति।

तेन इदमपि सखेदम् उक्तम् यत् प्राचीनकाले यादृशाः विद्वांसः देशे आसन्, तादृशाः न अधुना सन्ति। समयस्य आवश्यकता वर्तते यत् प्राचीनकाले पाणिनिः इव अद्यापि पण्डिताः भवेयुः।



# — गेयम् —

आनन्दभैरवी रागः, आदितालः

## पल्लवी

शमादिना संभावय - भ्रमन्तं दुरन्ताम्बुधौ

## अनुपल्लवी

कामं विदितं विभो - कमनीयं नेहेत्यहो
अवमान्यं सर्वमित्यभिमन्यते मतिः ( शमादिना )

## चरणानि

पञ्चधा भ्रामकं प्राक्तनं तिमिरन्तत्-
भञ्जकमञ्जनं - किञ्चन देयम्
संचितंसञ्जालय सम्भविष्यन्मा भवे-
न्निरञ्जय रञ्जाना - द्रञ्जय निरञ्जने ( शमादिना )

सञ्जातवञ्चमिदं - सर्वमिति गदितम्
संयमिबृन्दमपि - नापोतम्
संप्राप्तकृपो यदि - संवेशबोधोऽप्यहम्
संश्रय चित्तं विना - संश्रयि जातं कथम् ? ( शमादिना )

बन्धुरसुमाञ्चितं - बन्धूकतरुबृन्दम्
गन्धरहितमित्यंबुद - स्तंप्रत्यहो
सर्वजनीनं चरन् - सन्तापहरं नु किम्
संहरत्यात्मरसं - संभावितात्मन् वद ? ( शमादिना )

यल् उमामहेश्वरः





# व्यासवाल्मीकिसंवादः



महाविद्वान्
श्री कांची प्र० भ० अण्णङ्गराचार्यस्वामी

( पूर्वानुबन्धः )

— व्यासवाक्यशेषः —

राज्यलाभो भवितेति प्रत्याशया स्थितस्य मम हन्त ! राज्याद् भ्रष्टता समजनि । सत्यपि राज्यभ्रंशे राजधान्यामेव क्वचन कोणे भिक्षुत्वेनापि वा अवस्थितिर्यदि लब्धा स्यात् तर्हि कथञ्चित्सह्या स्याद्वेदना; वने वासोऽपि हि हन्त ! कर्तव्य आपतितः ! .... इति खलु रामो निर्वेदातिशयं प्रकाशयति । राज्यभ्रंशवनवासयोः शोचनीयत्वविरहे सति कथमेवं नाम राममुखारविन्दाद्वचश्शरीरमाविर्भवेत् ? अस्त्येव सत्यं महानवसादभरो रामस्य हृदि गाढ़निषण्णः । अत एव राज्याद्भ्रंशो वने वास इति दुःखपरम्परासु प्रोच्यते । एतद्विप्रतीपतया "वनवासो महोदय" इति यदुक्तमुपक्रमे, तदौपचारिकमेव मन्तव्यं भवति । अपरिहार्यस्य अवश्यमनुभोक्तव्यत्वेन संघटितस्य च शोकस्य शोकत्वेन कथनं विफलमिति धिया संतोषत्वेन कृतं प्रकाशनं बाह्यवेषमात्रम् । वनवासनिदेशकाले अप्रमेयं परितापमन्तःकरणे बिभ्रदपि गाम्भीर्यात्तथा व्याजहार "वनवासो महोदय" इति । कुक्षिगतः परितापो व्यक्तीभवत्येव खलु "राज्याद्भ्रंशः .... .... ईदृशीयं ममालक्ष्मी" रित्यादिना । इत्येवं विप्रतिपत्तौ किं समाधानं भगवन् ! ।

**वाल्मीकिः** – विज्ञापये महात्मन्! नैष वादो मात्रयाऽपि साधीयान्; "वनवासो महोदय" इति कथनं सत्यमार्जवेनैव समपद्यत। वस्तुतः कीदृशेनाभिसन्धिना तदा तथा कथितमिति विवेचनीयम्। 'गुणाभिरामया वैदेह्या साकमैकान्तिकवासः सिध्येत; परमभागवतानामभिमाने वर्तनं च परमप्रयोजनं फलेत्' इति प्रधानतममभिसन्धिद्वितयमुद्वहन्नेव रामो हार्दकुतूहलभरेण तथा नाम कथयामास "वनवासो महोदय" इति। तदिदमभिसन्धिद्वितयमपि दुर्दैववशात् व्यभिचरितमभूदहह। रावणो वैदेहीमपजहार। सहवासयोग्यं परमभागवतं गृध्रराजं जटायुं च प्राणैर्व्ययूयुजत्। एवंविधसुदुस्सहक्लेशोपनिपातेन वनवासकुतूहलस्य हार्दस्यापि विलोपितत्वात् प्राक् परमानन्दसंदोहकन्दत्वेनाभिमतयोः स्थितयोरपि राज्यहानिवनवासयोः शोचनीयता समुपाजनि। कैकेयीनिदेशकाल एव निर्वेद एष आसीदिति ग्रहणं सर्वथाऽप्यशोभनम्।

**व्यासः**–समाहितिरेषा मम चेतसे भृशं स्वदते। अहमपि मनागुपपादये। "नष्टा सीता हतो द्विज" इति हेतूक्तिरत्र जीवनाडी। स्पृहणीयसहवासयोस्सीताजटायुषोर्विश्लेषेण विलपनावसरे "राज्याद् भ्रंशो वने वास" इति कथनं न कथञ्चिदपि दाशरथावनार्जवं व्यञ्जयितुमलम्। कश्चन परमभक्तो महान् श्रीवेङ्कटाद्रिनिलयस्य श्रीनिवासस्य ब्रह्मोत्सवसेवायां चिरादेव महत्तरं कुतूहलमभिवर्धयन्नवर्तत। कदाचित्प्रस्थितश्च वेङ्कटाद्रिमुपाययौ। प्रस्थानमुहूर्तदौर्लक्ष्येन विविधाः क्लेशास्तत्र तस्य समभवन्। महती वृष्टिस्स्यन्दते स्म। अवस्थातुं स्थानमपि न लब्धमनेन। जनसंघर्षश्च सुदुस्सह आसीत्। क्षुधया च भृशमभिभूतोऽभवत्। भगवांश्च नादृश्यत। अस्यामवस्थायां तस्य परमभक्तस्याक्रन्दनं कीदृशमहो भवेत्? 'स्वगृहे सुसुखमवस्थितिमपहाय हा किमिति प्रस्थितं मया! एतादृशाः क्लेशाः किमित्यनुभाव्या मम! इत्युच्चावचमाक्रन्दति सः। एतावता स्वगृहात्प्रस्थानकाले तस्य हार्द उत्साहः कुतूहलभरो वा नासीदिति किमु वक्तुं शक्यं योग्यं वा? सत्यं स

एष हार्देनैव कुतूहलेन चिरादभिवृद्धेन प्रस्थितः; परंतु अचिन्तितोपनतैः क्लेशविशेषैः खलु तादृशी वचनव्यक्तिरुद्भाव्यत । नैतावता तस्मिन्ननार्जवं शक्यशङ्कम् । अयमेव न्यायो रामचन्द्रेऽप्यनुसन्धेयः । वनवासो महोदय इति कथनं सहृदयमेव न त्वहृदयमिति ।

**वाल्मीकिः** – महर्षे ! यद्यत्प्रष्टव्यं प्रतिभाति, तत्तत्काममनुयुज्यताम् । यथामति प्रत्युत्तरयेयम् । एतादृशो रामगुणानुभवोऽपि महते सुकृताय कल्पेतेति विश्वसिमि ।

**व्यासः** – श्रीराघवमधिकृत्य प्रष्टव्यं बह्ववशिष्यते । अधुना सौमित्रिमधिकृत्य किमपि पृच्छामि । श्रीरामायणादिप्रवचननिरताः केचन प्राज्ञाः सुमित्रानन्दनमनृतवादिनमाचक्षत इति शृणोमि । अत्रैवं नाम तेषां निरूपणप्रक्रियेति च शृणोमि । सौमित्रिणा स्वाग्रजन्मानं राघवमुद्दिश्य (वनप्रस्थानसमये) "अहं सर्वं करिष्यामि जाग्रतस्स्वपतश्च ते" इति तावत्प्रतिश्रुतम् । हे राघव ! श्रीमता यद्यदुच्यते तत्सर्वमहं निर्वर्तयेयमिति हि प्रोक्तं भवति । तथा कृते सत्येव हि "अहं सर्वं करिष्यामीत्युक्तेस्सूनृतत्वं सेद्धुमर्हति । वनं प्रतिष्ठमानो रामचन्द्रः स्मात्मना सह समागन्तुकामं सौमित्रिं निषेधति स्मेति, स च नगर्यामनवतिष्ठमानः सहैव समाजगामेति च ननु प्रसिद्धम् । एतेन "अहं सर्वं करिष्यामी"त्युक्तिर्न पालितेति असत्यतामगादिति च निष्पद्यते । यस्य वागसत्या भवति, सोऽयममत्यवादीति स्वत एव संसिध्यति । तथा च सौमित्रेरसत्यवादिता प्रतिष्ठिताऽभूदिति ।, न केवलमेतावदेव; वनवासं परिसमाप्य साकेतनगरसमवाप्त्यनन्तरं मकुटाभिषेकमहोत्सवमनुभवन् रामचन्द्रो यौवराज्याभिषेकमूरीकर्तुमादिदेश सौमित्रिम् । तमप्यादेशमुदलङ्घयदसाविति "यदा न सौमित्रिरुपैति योग"मित्यादिना स्फुटमवगम्यते । एतेन च "अहं सर्वं करिष्यामी"ति तदुक्तिरसत्यैवेति सिद्धम । इत्येवं प्रवचनं कुर्वन्ति कतिचिदित्याकर्ण्यते । भगवन् ! अत्र वस्तुस्थितिरुद्घाट्यताम् ।

**वाल्मीकिः** – महर्षे ! गुरुकुलवासविमुखानां ह्येष व्याहारः । "अहं सर्वं करिष्यामी"त्युक्तेरव्यवहितपूर्ववाक्यं ननु किं नामेति निरीक्षणीयम् । "भवांस्तु सह वैदेह्या गिरिसानुषु रंस्यते । अहं सर्वं करिष्यामि जाग्रतस्स्वपतश्च ते"॥ इति हि संपूर्णश्लोकपाठः । चित्रकूटगिरिसानुषु सीतया सह रममाणे सति राघवे (तदात्वे) सर्वविधकैङ्कर्यचिकीर्षामेव हि सौमित्रिरात्मनः प्राचीकशत् । सततं सहैव स्थित्वा सर्वविधान्यपि कैङ्कर्याणि करवाणीति यद्विज्ञापितम्, तत्तथैव तेन परिपालितमिति न तत्र कोऽपि संशयो विपर्ययो वा । यदि तथा न कृतवान् स्यात् तदैव खलु तस्मिन्नवद्यं संभवेत् । यद्यथा प्रोक्तवान् तत्तथैव सुष्ठु कृतवानिति वस्तुस्थित्यां न कोऽप्याक्षेपं प्रपञ्चयितुं प्रभवति । 'वनवासकाले भवता सहैव स्थित्वा सर्वाणि कैङ्कर्याणि करवाणी'ति कृतायाः प्रतिज्ञाया विरोधेन यद्ययं नगरेऽवतिष्ठेत, तदैव हि सत्यवादिताभङ्गः, असत्यवादित्वप्रतिष्ठा वा नियतमुपजायेत । "वनवासावसरे दिव्यदम्पत्योर्युवयोः यद्यदावश्यकं कैङ्कर्यम् तत्सर्वमहं संपादयेयम्" इति हि सौमित्रिवचसः स्थितिः । नैवमिति न कोऽपि कथयिष्यति । एवं विधयां सौमित्रिप्रतिज्ञायां यः कश्चिदन्यथाभावो दृश्यते वा ? इति तावत्परीक्षणीयम् । न मात्रयाऽप्यन्यथाभाव इति निश्चप्रचम् । एवं च सौमित्रेरसत्यवादित्वप्रस्तावप्रसक्तिगन्धोऽपि नास्तीति संसिद्धम् ॥

(क्रमशः)



केचनैव महानुभावाः स्वच्छन्दं स्वच्छन्दं प्रेषितवन्तः । तेषां शुभनामानि अधः दीयन्ते । अन्यानपि प्रार्थये स्वकं अवलम्बमपि प्रदातुम् । ति. कं. ति.

## Names of Subscribers for Gairvani 1965

(Continuation)

| | | | |
|---|---|---|---|
| 83. | Registrar, Andhra University. | 4 | 00 |
| 83. | V. Venkatesampanthulu, Chittoor. | 4 | 00 |
| 84. | Paranandanatha A. V. Somachari | 4 | 00 |
| 85. | P. Kesavaiah, Pedavadugur | 4 | 00 |
| 86. | R. Sreenivasagopalachariar. Pudukottai | 1 | 50 |
| 87. | Kasirama Sarma Vaidya, Jadcherla | 4 | 00 |
| 88. | M. S. Gunda Sastry, Madakasira | 4 | 00 |
| 89. | R. Srinivasagopalchariar, Pudukottai | 2 | 50 |
| 90. | K. T. L Narasaiahacharya, Musunur | 5 | 00 |
| 91. | Kuchibhatla Chandrasekhara Sarma, Kothagudem. | 4 | 00 |

अद्ययावत् एतावन्त एवं सदस्याः ।



य. यस्. चूडामणिः
मद्रपुरी
परिचयपरीक्षायां
सर्वप्रथमतया उत्तीर्णा



जि. के. अम्मणिः
मद्रपुरी
अभिज्ञपरीक्षायां
सर्वप्रथमतया उत्तीर्णा

R. N. 8145/60. Postal R. No. H. 493.

वार्षिकम् रु. ४-०४



# प्रहेलिकाः

उच्छिष्टं शिवनिर्माल्यं वमनं शवकर्पटम् ।
काकविष्ठासमुत्पन्नः पञ्चैतेऽतिपवित्रकाः ॥

( दुग्धं, गङ्गा, मधु, पट्टांबरम्, अश्वत्थः इति पञ्च )

अनेकसुषिरं वाद्यं कान्तं स्त्रीमुखपङ्कजम् ।
चक्रिणा च सदाऽऽराध्यं यो जानाति स पण्डितः ॥

वल्मीकम् वकाराद्यं ककारान्तं भवति । स्त्री-श्वेतपिपीलिका, तन्मुखजातेन कर्दमेन निर्मीयते च । चक्रिणा-सर्पेण सदा आराध्यं भवति ।

तरुण्यालिंगितः कण्ठे नितम्बस्थलमाश्रितः ।
गुरूणां संनिधानेपि कः कूजति मुहुर्मुहुः ?

( सजलघटः )

Published by Sri N. Ramanatha Iyer, B. A., B. L., Advocate & Secretary,
S. B. P. Sabha, Chittoor (A. P.)
Printed by Sri T. K. Thiruvengadacharya,
at Vijaya Press, Chittoor (A. P.) C. 1000.